निर्गुणंनित्यमुक्तम् ३० हेवीरविदुरउपेयुषीप्राप्ता ३१ हेसौम्यतस्यास्तन्मर्त्यंशरीरंसरिदभूत्कथंभूतंयोगेनविधूताविलीनामार्त्यादेहिकाधातुमलायस्य ३२ कपिलोऽपिप्रयातिस्मक्तम् तदेवप्रपन्चयति कपिलोऽपीतित्रिभिः समनुज्ञाप्यअनुज्ञांसंप्रार्थ्य ३३ दत्तमर्हणम-

एवंसाकपिलोक्तेनमार्गेणाचिरतःपरम् आत्मानंब्रह्मनिर्वाणंभगवंतमवापह ३० तद्वीरासीत्पुण्यतमंक्षेत्रंत्रैलोक्यविश्रुतम् नाम्नासिद्धपदंयत्रसासंसिद्धिमुपेयुषी ३१ तस्यास्तद्योगविधुतमार्त्यंमर्त्यमभूत्सरित्स्रोतसांप्रवरासौम्यसिद्धिदासिद्धसेविता ३२ कपिलोऽपिमहायोगीभगवान्पितुराश्रमात् मातरंसमनुज्ञाप्यप्रागुदीचींदिशंययौ ३३ सिद्धचारणगंधर्वैर्मुनिभिश्चाप्सरोगणैः स्तूयमानःसमुद्रेणदत्तार्हणनिकेतनः ३४ आस्तेयोगंसमास्थायसांख्याचार्यैरभिष्टुतः त्रयाणामपिलोकानामुपशांत्यैसमाहितः ३५ एतन्निगदितंतातयत्पृष्टोऽहंतवानघ कपिलस्यचसंवादोदेवहूत्याश्चपावनः ३६ यइदमनुशृणोतियोऽभिधत्तेकपिलमुनेर्मतमात्मयोगगुह्यम् भगवतिकृतधीःसुपर्णकेतावुपलभतेभगवत्पदारविंदम् ३७ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेकापिलेयोपाख्यानेत्रयस्त्रिंशत्तमोऽध्यायः ३३ श्रीकृष्णार्पणमस्तु ॥ ॥ ॥

र्घ्यंनिकेतनंचयस्मै ३४ उपशांत्यर्थंसमाहितआस्ते ३५ प्रकरणार्थमुपसंहरति एतदितिनवत्यया ३६ एतच्छ्रवणकीर्त्तनफलमाह यइति सुपर्णकेतौगरुडध्वजेउपलभतेप्राप्नोति ३७ इतिश्रीभागवतेमहापुराणेतृतीयस्कंधेभावार्थदीपिकायांश्रीधरस्वामिविरचितायांत्रयस्त्रिंशोऽध्यायः ३३ ॥ ॥ ॥

इतिश्रीमद्भागवततृतीयस्कंधःसमाप्तः